

शुद्धम्
सरलम्
सुन्दरम्

NET/PGT
GIC/GGIC/GDC
IAS & OTHER
COMPETITIVE
EXAMS

श्रीमद्भट्टोजिदीक्षितप्रणीतायाः

वैयाकरणसिद्धान्तकौमुद्याः

# अथ कारकप्रकरणम्

## सूत्रविवरणात्मको मूलपाठः

# विभक्त्यर्थप्रकरणम्

ई-बुक्-संस्करणम्— प्रथमम्; निर्जला एकादशी (विक्रमसंवत्-२०७९) ख्रिस्ताब्दः- 2023.05.31
स्थानम्— देवप्रयागः , पौडी-गढवालम्, उत्तराखण्डः— २४९३०१

मूल्यम्— अमूल्यम्
सम्पादकः —डॉ. श्रीओम शर्मा (व्याकरणविभागः सहायकाचार्यः CSU देवप्रयागः)



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

अस्माकं सम्पर्कसूत्राणि—


e-mail अणुवाक् :—samskritsaarah@gmail.com


ह्वाट्सैप्— ८८९९१८७९२९ (भवतां परामर्शानां स्वागतम्)

YouTube— संस्कृतसारः @sanskrit sar


FACEBOOK —@sanskrit_shiksha संस्कृतशिक्षा

**Title:—** कारकप्रकरणम्/विभक्त्यर्थप्रकरणम्

(karak prakaranam/ vibhaktyartha prakaranam)

**Author's name:—** Bhattaoji dixit

**Editor's name:—** Shriom Sharma

**Published by:—** Self Published by Sanskrit sar

**Publisher 's Address:—** CSU Shri Raghunath Kriti Parisar,

Devaprayag, Pauri-garhwal, Uttarakhand-249301

**Printer's Details :—** E-book

**Edition Details:—** I

**E-ISBN :—** --------



**Year:—** 2023

# अन्तर्वाक्

प्रिय ! संस्कृतानुरागी अध्येताओ! व्याकरणोदधि अवगाहन तत्पर विद्वत्गण ! आप सभी को सादर अभिवादन। आपको सुविदित है कि लोक में वाक्यव्यवहार पदव्यवहार की अपेक्षा प्रमुख है तथा सुबन्त एवं तिङन्त पदों के समूह को वाक्य कहते हैं। वाक्यगत पदों में प्रथमादि सप्तविभक्तियों के यथायथ प्रयोग के लिए पाणिनि जी ने कुछ नियम बनाए जो कि अष्टाध्यायी के पहले तथा दूसरे अध्याय में लिखे। विभक्ति निर्धारण के इन ११५ सूत्र तथा ३९ वार्तिकों को भट्टोजिदीक्षित जी ने अपने ग्रन्थ वैयाकरण सिद्धान्तकौमुदी के 'कारकप्रकरणम्' में स्थान दिया। इन नियमों से अनुशासित संस्कृतवाङ्मय शताब्दियों बाद भी हमारे समक्ष अविकृत रूप में उपलब्ध है।

आज के मनीषियों ने इस कारक प्रकरण को अत्युपयोगी जानकर छात्रों के ज्ञानवर्धन के लिए विविध विश्वविद्यालयीय परीक्षाओं के साथ-साथ प्रतियोगी परीक्षाओं जैसे - NET, TET, C.T.E.T, R.P.S.C, MP-VARG-1-2, B.Ed, G.D.C, T.G.T, P.G.T, I.A.S., P.CS, इत्यादि कई महत्त्वपूर्ण प्रतियोगी परीक्षाओं के पाठ्यक्रम में भी में समाविष्ट कर दिया है। जिससे इस प्रकरण की उपादेयता आज के परिपेक्ष्य में और भी बढ़ गयी है।

उपर्युक्त सभी परीक्षाओं के साथ-साथ विद्वान् लोग साक्षात्कार में भी कारक प्रकरण को पर्याप्त पूछा करते हैं। इसलिए हमने विचार किया कि प्रतिदिन पाठ हेतु कारक एक मूल संस्करण तैयार किया जाए ताकि छात्रों को पहले मूल अच्छे से घुट जाए। वह मूलपाठ विशिष्ट हो जिसका पारायण करते-करते सम्बन्धित विषय की पर्याप्त जानकारी मिल सके। अत: हमने इस मूलपाठ में प्रमुख विशेषताएँ समावेशित कर दी हैं, जो इस प्रकार हैं—

- प्रत्येक सूत्र एवं वार्तिक का विशेष विवरण जो कि अलग रंग में दिया गया है। जिसे पाठ करते समय छात्र यह जान सकेंगे कि यह सूत्र या वार्तिक क्या करता है।
- भट्टोजिदीक्षित जी ने कौमुदी के मूल में सूत्र के साथ अर्थ, उदाहरण, प्रत्युदाहरण तथा व्याख्यान के रूप में कुछ पङ्क्तियाँ भी लिखी हैं जिन्हें पृथक्-पृथक् रूप से समझने के लिए हमने इस संस्करण में विषय विभाग के हिसाब से अलग-अलग पङ्क्तियों में दर्शा दिया है जिससे छात्रों में सूत्रगत विषय की सही समझ विकसित हो सके।
- वैयाकरणसिद्धान्तकौमुदी के कारकप्रकरण में अनेक स्थलों पर पाठभेद हैं। उन सभी प्रकार के पाठभेदों को निम्नलिखित संस्करणों की सहायता से पाद टिप्पणी में जोड़ दिया है—

१. महामहोपाध्याय गिरिधर शर्मा/ परमेश्वरानन्द शर्मा, वैयाकरणसिद्धान्तकौमुदी, मोतीलाल, बनारसीदास संस्करण– २००४.
२. धरानन्द शास्त्री घिल्डियाल, विभक्त्यर्थ/कारकप्रकरण, मोतीलाल बनारसीदास, दशम पुनर्मुद्रण, दिल्ली – २०२१.
३. गुरुप्रसाद शास्त्री, वैयाकरणसिद्धान्तकौमुदी ,चौखम्बा सुरभारती प्रकाशन, प्रथम संस्करण,वाराणसी – २०१२.
४. शिवदत्त शर्मा दाधिमथ, वैयाकरणसिद्धान्तकौमुदी, खेमराज श्रीकृष्णदास, प्रथम संस्करण मुम्बई – १९२५.
५. शं. चन्द्रशेखर शास्त्री, वैयाकरणसिद्धान्तकौमुदी, परिमल पब्लिकेशंस, प्रथम संस्करण, दिल्ली – २०१९.
६ भीमसेन शास्त्री, लघुसिद्धान्तकौमुदी कृदन्त-कारक प्रकरण तृतीयभाग, तृतीय संस्करण, भैमी प्रकाशन, दिल्ली - २००५.
७. गोविन्दप्रसाद शर्मा, लघुसिद्धान्तकौमुदी, चौखम्बा सुरभारतीप्रकाशन, प्रथम संस्करण वाराणसी – २००७
८. गोविन्दाचार्य, वैयाकरणसिद्धान्तकौमुदी द्वितीयभाग, चौखम्बा सुरभारतीप्रकाशन, प्रथम संस्करण वाराणसी – २०१६

कारक प्रकरण का मूलपाठ करने में जो समस्यायें आती हैं, उन समस्याओं को दृष्टिगत करते हुए हमने इस संस्करण को स्वानुभव के आधार पर तैयार किया है। इस संस्करण को तैयार करने में मेरे छात्र शुभम् शर्मा ग्वालियर का पर्याप्त सहयोग रहा, उन्हें मैं अनन्त आशीर्वाद प्रदान करता हूँ तथा इस कारकपाठ का प्रूफरीड कार्य न्यायविभाग के स्वाध्यायशील आचार्य डॉ. जनार्दन सुवेदी जी ने बड़ी ही गहनता से किया है, एतदर्थ आचार्यवर का धन्यवाद ज्ञापित करते हैं।

यह प्रकरण भी PDF के रूप में हमारे संस्कृतसार: के https://archive.org/details/@sanskrit_sar अकाउंट पर सर्वदा नि:शुल्क उपलब्ध है। अन्त में जगन्नियन्ता ईश्वर को प्रणाम करते हुए इस वैयाकरणसिद्धान्तकौमुदीस्थ कारक/विभक्त्यर्थप्रकरण के इस विशिष्ट संस्करण को अपने गुरुजनों को सादर समर्पित करता हूँ॥

**यदत्र सौष्ठवं किञ्चित् तद्गुरोरेव मे न हि। यदत्रासौष्ठवं किञ्चित् तन्ममैव गुरोर्न हि॥**

*************************************************

❖ प्रथमाविभक्तिविधायकं विधिसूत्रम्—

**०१. प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे प्रथमा[२.३.४६]**

➢ नियतोपस्थितिकः= प्रातिपदिकार्थः ।

➢ मात्रशब्दस्य प्रत्येकं योगः ।

अर्थः– प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये[1] परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा स्यात् ।

उदा. –› उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् ।

➢ अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् । अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्य । उदा. –› तटः - तटी - तटम् ।

उदा. –› परिमाणमात्रे– द्रोणो व्रीहिः।

➢ द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम् । प्रत्ययार्थस्तु परिच्छेद्य-परिच्छेदक-भावेन व्रीहौ विशेषणमिति विवेकः ।

उदा. –› वचनं सङ्ख्या । एकः । द्वौ । बहवः ।

➢ इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ।

❖ सम्बोधने प्रथमाविभक्तिविधायकं विधिसूत्रम्—

**०२. सम्बोधने च [ २.३.४७ ]**

अर्थः– इह प्रथमा स्यात् ।

उदा. –› हे राम !

**॥ इति प्रथमा ॥**

---

## अथ द्वितीया विभक्तिः

❖ (कारकसञ्ज्ञाधिकारः) अधिकारसूत्रम्—

**०३. कारके [ १.४.२३ ]**

➢ इत्यधिकृत्य—

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**०४. कर्तुरीप्सिततमं कर्म [ १.४.४९ ]**

अर्थः– कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसञ्ज्ञं स्यात् ।

➢ कर्तुः किम् ? माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः, न तु कर्तुः ।

➢ तमब्ग्रहणं किम् ? पयसा ओदनं भुङ्क्ते ।

➢ 'कर्म' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशतीत्यत्रैव स्यात् ॥

❖ (अनभिहिताधिकारः) अधिकारसूत्रम्—

**०५. अनभिहिते [ २.३.१ ]**

➢ इत्यधिकृत्य ।

❖ द्वितीयाविभक्तिविधायकं विधिसूत्रम्—

**०६. कर्मणि द्वितीया [ २.३.२ ]**

अर्थः– अनुक्ते कर्मणि द्वितीया स्यात् ।

उदा. –› हरिं भजति ।

➢ अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव ।

➢ अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्— हरिः सेव्यते । कृत्— लक्ष्म्या सेवितः। तद्धितः— शतेन क्रीतः= शत्यः। समासः— प्राप्त आनन्दो यं स = प्राप्तानन्दः।

➢ क्वचिन्निपातेनाभिधानम्, यथा– विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् । 'साम्प्रतमि'त्यस्य हि युज्यत इत्यर्थः ॥

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**०७. तथायुक्तं चानीप्सितम् [ १.४.५० ]**

अर्थः– ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसञ्ज्ञं स्यात् ।

उदा. –› ग्रामं गच्छन् तृणं स्पृशति । ओदनं भुञ्जानो विषं भुङ्क्ते[2] ॥

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**०८. अकथितं च [ १.४.५१ ]**

अर्थः– अपादानादि-विशेषैरविवक्षितं कारकं कर्मसञ्ज्ञं स्यात्।

➢ दुह्याच्-पच्-दण्ड्-रुधि-प्रच्छि-चि-ब्रू-शासु-जि-मथ्-मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नी-हृ-कृष्-वहाम् ॥

➢ दुह्यादीनां द्वादशानां तथा नी-प्रभृतीनां चतुर्णां कर्मणा यद् युज्यते, तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः ।

उदाहरणानि–›

➢ दुह्— गां दोग्धि पयः ।

➢ याच्— बलिं याचते वसुधाम् । अविनीतं विनयं याचते ।

➢ पच्— तण्डुलान् ओदनं पचति ।

➢ दण्ड्— गर्गान् शतं दण्डयति ।

➢ रुध्— व्रजम् अवरुणद्धि गाम् ।

➢ प्रच्छ्— माणवकं पन्थानं पृच्छति ।

➢ चि— वृक्षम् अवचिनोति फलानि ।

➢ ब्रू, शास्— माणवकं धर्मं ब्रूते शास्ति वा ।

➢ जि— शतं जयति देवदत्तम् ।

➢ मथ्— सुधां क्षीरनिधिं मथ्नाति ।

➢ मुष्— देवदत्तं शतं मुष्णाति ।

➢ नी, हृ, कृष्, वह्— ग्रामम् अजां नयति हरति कर्षति वहति वा ।

➢ अर्थनिबन्धनेयं सञ्ज्ञा ।

  ➢ भिक्ष्— बलिं भिक्षते वसुधाम् ।

  ➢ भाष्— माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ।

  ➢ कारकं किम् ? माणवकस्य पितरं पन्थानं पृच्छति ।

★ कर्मसञ्ज्ञाविधायकं वार्तिकम्— **अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ।**

उदा. –› कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ॥

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**०९. गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्माकर्मकाणामणि कर्ता स णौ [ १.४.५२ ]**

अर्थः– गत्याद्यर्थानां शब्दकर्मणाम् अकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात्।

उदाहरणानि –›

➢ शत्रूनगमयत् स्वर्गम्, वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्, वेदमध्यापयद्विधिम् ॥ १ ॥
आसयत्सलिले पृथ्वीं यः, स मे श्रीहरिर्गतिः ॥

➢ 'गति' इत्यादि किम् ? पाचयत्योदनं देवदत्तेन ।

---

[1] बहुषु संस्करणेष्वत्र 'लिङ्गमात्राद्याधिक्ये' इति पाठो वर्त्तते, अस्मिन् पाठपक्षे 'परिमाणमात्रे' इति पाठस्यावश्यकता नास्ति, यतोहि 'आदि' इति शब्देन परिमाणस्य ग्रहणात् ।

[2] 'विषं भुङ्क्ते' इति बालमनोरमायां पाठः।

- अण्यन्तानां किम् ? गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते— गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः।

★ कर्मसञ्ज्ञानिषेधकं वार्तिकम्— **नीवह्योर्न।**

उदा. → नाययति वाहयति वा भारं भृत्येन।

★ कर्मसञ्ज्ञाविधायकं वार्तिकम्— **नियन्तृकर्तृकस्य वहेरनिषेधः।**

उदा. → वाहयति रथं वाहान् सूतः।

★ कर्मसञ्ज्ञानिषेधकं वार्तिकम्— **आदिखाद्योर्न।**

उदा. → आदयति खादयति वा अन्नं बटुना।

★ कर्मसञ्ज्ञानिषेधवार्तिकम्— **भक्षेरहिंसार्थस्य न।**

उदा. → भक्षयत्यन्नं बटुना।

- अहिंसार्थस्य किम् ? भक्षयति बलीवर्दान् सस्यम्

★ कर्मसञ्ज्ञाविधायकं वार्तिकम्— **जल्पतिप्रभृतीनामुपसङ्ख्यानम्।**

उदा. → जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः।

★ कर्मसञ्ज्ञाविधायकं वार्तिकम्— **दृशेश्च।**

उदा. → दर्शयति हरिं भक्तान्।

- सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते। तेन स्मरति जिघ्रतीत्यादीनां न— स्मारयति घ्रापयति वा देवदत्तेन।

★ कर्मसञ्ज्ञानिषेधकं वार्तिकम्— **शब्दायतेर्न।**

उदा. → शब्दाययति देवदत्तेन।

- धात्वर्थ-सङ्गृहीत-कर्मत्वेनाकर्मकत्वात् प्राप्तिः।
- येषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः, न त्वविवक्षित-कर्माणोऽपि, तेन 'मासमासयति देवदत्तमि'त्यादौ कर्मत्वं भवत्येव। देवदत्तेन पाचयतीत्यादौ तु न॥

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**१०. हृक्रोरन्यतरस्याम् [ १.४.५३ ]**

अर्थः— हृक्रोरणौ यः कर्ता स णौ वा कर्मसञ्ज्ञः स्यात्।

उदा. → हारयति कारयति वा भृत्यं भृत्येन वा कटम्।

★ विकल्पेन-कर्मसञ्ज्ञाविधायकं वार्तिकम्—

**अभिवादिदृशोरात्मनेपदे वेति वाच्यम्।**

उदा. → अभिवादयते दर्शयते देवं भक्तं भक्तेन वा।

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**११. अधि-शीङ्स्थाऽऽसां कर्म [ १.४.४६ ]**

अर्थः— अधिपूर्वाणामेषामाधारः कर्म स्यात्।

उदा. → अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः।

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**१२. अभि-नि-विशश्च [ १.४.४७ ]**

अर्थः— 'अभि-नि' इत्येतत्संघातपूर्वस्य विशतेराधारः कर्म स्यात्।

उदा. → अभिनिविशते सन्मार्गम्।

- 'परिक्रयणे सम्प्रदानम्' इति सूत्राद् इह मण्डूकप्लुत्या 'अन्यतरस्याम्' ग्रहणम् अनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न— पापेऽभिनिवेशः।

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**१३. उपान्वध्याङ्वसः [ १.४.४८ ]**

अर्थः— उपादिपूर्वस्य वसतेराधारः कर्म स्यात्।

उदा. → उपवसति, अनुवसति, अधिवसति आवसति वा वैकुण्ठं हरिः।

★ कर्मसञ्ज्ञानिषेधवार्तिकम्— **अभुक्त्यर्थस्य न।**

उदा. → वने उपवसति।

## ( उपपदद्वितीया )

★ द्वितीयाविभक्तिविधायकं श्लोकवार्तिकम्—

**उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु**
**द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।**

उदाहरणानि →

- उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक् कृष्णाभक्तम्।
- उपर्युपरि लोकं हरिः। अध्यधि लोकम्। अधोऽधो लोकम्।

★ द्वितीयाविभक्तिविधायकं वार्तिकम्—

**अभितः परितः समया-निकषा-हा-प्रति-योगेऽपि।**

उदा. → अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया। निकषा लङ्काम्। हा कृष्णाभक्तम्। तस्य शोच्यत इत्यर्थः। बुभुक्षितं न प्रतिभाति किञ्चित्॥

**१४. अन्तराऽन्तरेण युक्ते [ २.३.४ ]**

अर्थः— आभ्यां योगे द्वितीया स्यात्।

उदा. → अन्तरा त्वां मां हरिः। अन्तरेण हरिं न सुखम्।

❖ (कर्मप्रवचनीयसञ्ज्ञाधिकारः) अधिकारसूत्रम्—

**१५. कर्मप्रवचनीयाः [ १.४.८३ ]**

- इत्यधिकृत्य।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं प्रथमं सञ्ज्ञासूत्रम् —

**१६. अनुर्लक्षणे [ १.४.८४ ]**

अर्थः— लक्षणे द्योत्येऽनुरुक्तसञ्ज्ञः स्यात्।

- गत्युपसर्गसञ्ज्ञापवादः।

❖ कर्मप्रवचनीययोगे द्वितीया-विभक्तिविधायकं विधिसूत्रम् —

**१७. कर्मप्रवचनीययुक्ते द्वितीया [ २.३.८ ]**

अर्थः— एतेन योगे द्वितीया स्यात्।

उदा. → जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः।

- परापि हेताविति तृतीयाऽनेन बाध्यते। 'लक्षणेत्थंभूत..' इत्यादिना सिद्धे पुनः सञ्ज्ञाविधानसामर्थ्यात्॥

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं द्वितीयं सूत्रम्—

**१८. तृतीयार्थे [ १.४.८५ ]**

अर्थः— अस्मिन्द्योत्येऽनुरुक्तसञ्ज्ञः स्यात्।

उदा. → नदीमन्ववसिता सेना। नद्या सह सम्बद्धेत्यर्थः।षिञ् बन्धने क्तः।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं तृतीयं सूत्रम् —

**१९. हीने [ १.४.८६ ]**

अर्थः— हीने द्योत्ये अनुः प्राग्वत्।

उदा. → अनु हरिं सुराः। हरेर्हीना इत्यर्थः।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं चतुर्थं सूत्रम्—

**२०. उपोऽधिके च [ १.४.८७ ]**

अर्थः— अधिके हीने च द्योत्ये 'उप' इत्यव्ययं प्राक्संज्ञं स्यात्।

- अधिके सप्तमी वक्ष्यते।

उदा. → हीने— उप हरिं सुराः।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं पञ्चमं सूत्रम्—

**२१.लक्षणेत्थम्भूताख्यान-भाग-वीप्सासु प्रतिपर्यनवः[१.४.९०]**

अर्थः– एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः।

उदाहरणानि →

- लक्षणे— वृक्षं प्रति, पर्यनु वा विद्योतते विद्युत्।
- इत्थंभूताख्याने— भक्तो विष्णुं प्रति, पर्यनु वा।
- भागे— लक्ष्मीर्हरिं प्रति, पर्यनु वा। हरेर्भाग इत्यर्थः।
- वीप्सायाम्— वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्।
- एषु किम्? परिषिञ्चति।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं षष्ठं सूत्रम्—

**२२. अभिरभागे [ १.४.९१ ]**

अर्थः– भागवर्जे लक्षणादावभिरुक्तसञ्ज्ञः स्यात्।

उदा. → हरिमभि वर्तते। भक्तो हरिमभि। देवं देवमभि सिञ्चति।

- अभागे किम्? यदत्र ममाभिष्यात्तद्दीयताम्।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं सप्तमं सूत्रम्—

**२३. अधिपरी अनर्थकौ [ १.४.९३ ]**

अर्थः– उक्तसंज्ञौ स्तः।

उदा. → कुतोऽध्यागच्छति। कुतः पर्यागच्छति।

- गतिसञ्ज्ञाबाधात् 'गतिर्गतौ' इति निघातो न।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकम् अष्टमं सूत्रम्—

**२४. सुः पूजायाम् [ १.४.९४ ]**

उदा. → सु सिक्तम्। सु स्तुतम्। अनुपसर्गत्वान्न षः।

- पूजायां किम्? सुषिक्तं किं (स्यात्)[3] तवाऽत्र। क्षेपोऽयम्।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं नवमं सूत्रम्—

**२५. अतिरतिक्रमणे च [ १.४.९५ ]**

अर्थः– अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसञ्ज्ञः स्यात्।

उदा. → अति देवान् कृष्णः॥

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं दशमं सूत्रम्—

**२६. अपिः पदार्थ-सम्भावनान्ववसर्ग-गर्हा-समुच्चयेषु [ १.४.९६ ]**

अर्थः– एषु द्योत्येष्वपिरुक्तसञ्ज्ञः स्यात्।

उदा. → सर्पिषोऽपि स्यात्।

- अनुपसर्गत्वान्न षः। सम्भावनायां लिङ्। तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन् 'अपि' शब्दः 'स्यादि'त्यनेन सम्बध्यते। 'सर्पिष' इति षष्ठी तु 'अपि'शब्दबलेन गम्यमानस्य बिन्दोरवयवावयवि-भावसम्बन्धे। इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम। द्वितीया तु नेह प्रवर्तते — सर्पिषो बिन्दुना योगो, न तु अपिना इति उक्तत्वात्।

उदा. → अपि स्तुयाद्विष्णुम्। सम्भावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः।

उदा. → अपि स्तुहि। अन्ववसर्गः कामचारानुज्ञा।

उदा. → धिग् देवदत्तमपि स्तुयाद्वृषलम्। गर्हा।

उदा. → अपि सिञ्च अपि स्तुहि। समुच्चये।

[3] अत्र 'स्यात्' इति पदं बालमनोरमा-टीका अनुरोधेन अस्माभिः स्थापितम्।

❖ द्वितीयाविधायकं विधिसूत्रम्—

**२७. कालाध्वनोरत्यन्तसंयोगे [ २.३.५ ]**

अर्थः– इह द्वितीया स्यात्।

उदाहरणानि →

- मासं कल्याणी। मासमधीते। मासं गुडधानाः।
- क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः।
- अत्यन्तसंयोगे किम्? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः।

**॥ इति द्वितीया ॥**

---

## अथ तृतीया विभक्तिः

❖ कर्तृसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**२८. स्वतन्त्रः कर्ता [ १.४.५४ ]**

अर्थः– क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्।

❖ करणसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**२९. साधकतमं करणम् [ १.४.४२ ]**

अर्थः– क्रियासिद्धौ प्रकृष्टोपकारकं करणसञ्ज्ञं स्यात्।

- तमप्-ग्रहणं किम्? गङ्गायां घोषः।

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**३०. कर्तृकरणयोस्तृतीया [ २.३.१८ ]**

अर्थः– अनभिहिते कर्तरि करणे च तृतीया स्यात्।

उदा. → रामेण बाणेन हतो वाली॥

★ तृतीयाविभक्तिविधायकं वार्तिकं— **प्रकृत्यादिभ्य उपसंख्यानम्।**

उदा. → प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेनैति। विषमेणैति। द्विद्रोणेन धान्यं क्रीणाति। सुखेन दुःखेन वा यातीत्यादि।

❖ करणसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**३१. दिवः कर्म च [ १.४.४३ ]**

अर्थः– दिवः साधकतमं कारकं कर्मसञ्ज्ञं स्याच्चात्करणसञ्ज्ञम्।

उदा. → अक्षैरक्षान्वा दीव्यति।

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**३२. अपवर्गे तृतीया [ २.३.६ ]**

अर्थः– अपवर्गः= फलप्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्।

उदा. → अह्ना क्रोशेन वाऽनुवाकोऽधीतः।

- अपवर्गे किम्? मासमधीतो नाऽऽयातः।

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**३३. सहयुक्तेऽप्रधाने [ २.३.१९ ]**

अर्थः– सहार्थेन युक्ते अप्रधाने तृतीया स्यात्।

उदा. → पुत्रेण सहागतः पिता। एवं साकम्, सार्धम्, समम्-योगेऽपि।

- विनापि तद्योगं तृतीया। 'वृद्धो यूना...' इत्यादिनिर्देशात्।

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**३४. येनाङ्गविकारः [ २.३.२० ]**

अर्थः– येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततः तृतीया स्यात्।

उदा. → अक्ष्णा काणः। अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः।

- अङ्गविकारः किम्? अक्षि काणमस्य।

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**३५. इत्थंभूतलक्षणे [ २.३.२१ ]**

अर्थः– कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात्।

उदा. → जटाभिस्तापसः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः।

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**३६. सञ्ज्ञोऽन्यतरस्यां कर्मणि [ २.३.२२ ]**

अर्थः– संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात्।

उदा. → पित्रा पितरं वा संजानीते।

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**३७. हेतौ [ २.३.२३ ]**

अर्थः– हेत्वर्थे तृतीया स्यात्।

- द्रव्यादि-साधारणं निर्व्यापारसाधारणं च हेतुत्वम्।
- करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च।

उदा. → दण्डेन घटः। पुण्येन दृष्टो हरिः।

- फलमपीह हेतुः— अध्ययनेन वसति।
- गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका। उदा. → अलं श्रमेण। श्रमेण साध्यं नास्तीत्यर्थः। इह साधनक्रियां प्रति श्रमः करणम्।

उदा. → शतेन शतेन वत्सान् पाययति पयः। शतेन परिच्छिद्येत्यर्थः।

★ तृतीयाविभक्तिविधायकं वार्तिकम्—

**अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया।**

उदा. → दास्या संयच्छते कामुकः।

- धर्म्ये तु— भार्यायै संयच्छति।

**॥ इति तृतीया ॥**

---

## अथ चतुर्थी विभक्तिः

❖ सम्प्रदानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**३८.कर्मणा यमभिप्रैति स सम्प्रदानम् [ १.४.३२ ]**

अर्थः– दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसञ्ज्ञः स्यात्॥

❖ चतुर्थीविभक्तिविधायकं सञ्ज्ञासूत्रम्—

**३९.चतुर्थी सम्प्रदाने [ २.३.१३ ]**

उदा. → विप्राय गां ददाति।

- अनभिहित इत्येव। दीयतेऽस्मै दानीयो विप्रः[4]।

★ सम्प्रदानसञ्ज्ञाविधायकं वार्तिकम्—

**क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्।**

उदा. → पत्ये शेते।

★ करणसञ्ज्ञा-कर्मसञ्ज्ञाविधायकं वार्तिकम्—

**यजेः कर्मणः करणसञ्ज्ञा सम्प्रदानस्य च कर्मसञ्ज्ञा।**

उदा. → पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः।

❖ सम्प्रदानसञ्ज्ञाविधायकं प्रथमं सूत्रम्—

**४०. रुच्यर्थानां प्रीयमाणः [ १.४.३३ ]**

अर्थः– रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात्।

उदा. → हरये रोचते भक्तिः।

- अन्यकर्तृकोऽभिलाषो रुचिः। हरिनिष्ठप्रीतेर्भक्तिः कर्त्री।
- प्रीयमाणः किम्? देवदत्ताय रोचते मोदकः पथि।

❖ सम्प्रदानसञ्ज्ञाविधायकं द्वितीयं सूत्रम्—

**४१.श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः [ १.४.३४ ]**

अर्थः– एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात्।

उदा. → गोपी स्मरात् कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा।

- ज्ञीप्स्यमानः किम्? देवदत्ताय श्लाघते पथि

❖ सम्प्रदानसञ्ज्ञाविधायकं तृतीयं सूत्रम्—

**४२.धारेरुत्तमर्णः [ १.४.३५ ]**

अर्थः– धारयतेः प्रयोगे उत्तमर्ण उक्तसञ्ज्ञः स्यात्।

उदा. → भक्ताय धारयति मोक्षं हरिः।

- उत्तमर्णः किम्? देवदत्ताय शतं धारयति ग्रामे।

❖ सम्प्रदानसञ्ज्ञाविधायकं चतुर्थं सूत्रम्—

**४३.स्पृहेरीप्सितः [ १.४.३६ ]**

अर्थः– स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात्।

उदा. → पुष्पेभ्यः स्पृहयति।

- ईप्सितः किम्? पुष्पेभ्यो वने स्पृहयति।
- ईप्सितमात्रे इयं सञ्ज्ञा। प्रकर्षविवक्षायां तु परत्वात्कर्मसञ्ज्ञा — पुष्पाणि स्पृहयति।

❖ सम्प्रदानसञ्ज्ञाविधायकं पञ्चमं सूत्रम्—

**४४.क्रुध-द्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः [ १.४.३७ ]**

अर्थः– क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसञ्ज्ञः स्यात्।

उदा. → हरये क्रुध्यति/द्रुह्यति/ईर्ष्यति/असूयति वा।

- यं प्रति कोपः किम्? भार्यामीर्ष्यति। मैनामन्योऽद्राक्षीदिति।
- क्रोधोऽमर्षः। द्रोहोऽपकारः। ईर्ष्याऽक्षमा। असूया गुणेषु दोषाविष्करणम्।
- द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्ते। अतो विशेषणं सामान्येन यं प्रति कोप इति।

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**४५.क्रुध-द्रुहोरुपसृष्टयोः कर्म [ १.४.३८ ]**

अर्थः– सोपसर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसञ्ज्ञं स्यात्।

उदा. → क्रूरमभिक्रुध्यति, अभिद्रुह्यति।

❖ सम्प्रदानसञ्ज्ञाविधायकं षष्ठं सूत्रम्—

**४६.राधीक्ष्योर्यस्य विप्रश्नः [ १.४.३९ ]**

अर्थः– एतयोः कारकं सम्प्रदानं स्यात्, यदीयो विविधः प्रश्नः क्रियते।

उदा. → कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः।

❖ सम्प्रदानसञ्ज्ञाविधायकं सप्तमं सूत्रम्—

**४७.प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता [ १.४.४० ]**

अर्थः– आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपस्य व्यापारस्य कर्ता सम्प्रदानं स्यात्।

उदा. → विप्राय गां प्रतिशृणोति आशृणोति वा। विप्रेण मह्यं देहीति प्रवर्तितः प्रतिजानीत इत्यर्थः।

❖ सम्प्रदानसञ्ज्ञाविधायकम् अष्टमं सूत्रम्—

**४८.अनुप्रतिगृणश्च [ १.४.४१ ]**

अर्थः– आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसञ्ज्ञं स्यात्।

---

[4] 'दानीयो विप्रः' इत्यपि पाठान्तरम्।

उदा. → होत्रेऽनुगृणाति प्रतिगृणाति । होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ।

❖ सम्प्रदानसञ्ज्ञा, करणसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**४९.परिक्रयणे सम्प्रदानमन्यतरस्याम् [ १.४.४४ ]**

अर्थः– नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन् साधकतमं कारकं सम्प्रदानसञ्ज्ञं वा स्यात् ।

उदा. → शतेन शताय वा परिक्रीतः।

★ चतुर्थीविभक्तिविधायकं वार्तिकम्— **तादर्थ्ये चतुर्थी वाच्या ।**

उदा. → मुक्तये हरिं भजति ।

★ चतुर्थीविभक्तिविधायकं वार्तिकम्— **क्लृपि सम्पद्यमाने च**

उदा. → भक्तिर्ज्ञानाय कल्पते सम्पद्यते जायत इत्यादि ।

★ चतुर्थीविभक्तिविधायकं वार्तिकम्— **उत्पातेन ज्ञापिते च ।**

उदा. → वाताय कपिला विद्युत् ।

★ चतुर्थीविभक्तिविधायकं वार्तिकम्— **हितयोगे च ।**

उदा. → ब्राह्मणाय हितम् ॥

❖ चतुर्थीविभक्तिविधायकं विधिसूत्रम्—

**५०.क्रियार्थोपपदस्य च कर्मणि स्थानिनः [ २.३.१४ ]**

अर्थः– क्रियार्था क्रिया उपपदं यस्य, तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् ।

उदा. → फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः ।

उदा. → नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः ।

उदा. → एवं स्वयंभुवे नमस्कृत्येत्यादावपि ।

❖ चतुर्थीविभक्तिविधायकं विधिसूत्रम्—

**५१.तुमर्थाच्च भाववचनात् [ २.३.१५ ]**

अर्थः– 'भाववचनाश्च' इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् ।

उदा. → यागाय याति । यष्टुं यातीत्यर्थः ॥

❖ चतुर्थीविधायकं विधिसूत्रम्—

**५२.नमः स्वस्ति-स्वाहा-स्वधालं-वषड्योगाच्च [ २.३.१६ ]**

अर्थः– एभिर्योगे चतुर्थी स्यात् ।

➢ उदा. → हरये नमः ।

➢ **परिभाषा**— उपपदविभक्तेः कारकविभक्तिर्बलीयसी ।

उदा. → नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा ।

★ अर्थग्राहकं वार्तिकम्— **अलमिति पर्याप्त्यर्थग्रहणम् ।**

उदा. → तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ।

➢ प्रभ्वादियोगे षष्ठ्यपि साधुः । तस्मै प्रभवति । स 'एषां ग्रामणीः' इति निर्देशात् । तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम् ।

उदा. → वषड् इन्द्राय ।

➢ चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायां परामपि 'चतुर्थी चाशिषी..'ति षष्ठीं बाधित्वा चतुर्थ्येव भवति — स्वस्ति गोभ्यो भूयात् ।

❖ चतुर्थीविभक्तिविधायकं विधिसूत्रम्—

**५३.मन्यकर्मण्यनादरे विभाषाऽप्राणिषु [ २.३.१७ ]**

अर्थः– प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात् तिरस्कारे ।

उदा. → न त्वां तृणं मन्ये तृणाय वा ।

➢ श्यना निर्देशात् तानादिकयोगे न— न त्वां तृणं मन्वे ।

★ चतुर्थी-निषेध वार्तिकम्— **अप्राणिष्वित्यपनीय नौ-काकाऽन्न-शुक-शृगाल-वर्जेष्विति वाच्यम् ।**

➢ तेन 'न त्वां नावं[5] मन्ये' इत्यत्राप्राणित्वेऽपि चतुर्थी न । 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव ।

❖ द्वितीया,चतुर्थीविभक्तिविधायकं विधिसूत्रम्—

**५४.गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि [ २.३.१२ ]**

अर्थः– अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम् ।

उदा. → ग्रामं ग्रामाय वा गच्छति ।

➢ चेष्टायां किम् ? मनसा हरिं व्रजति ।

➢ अनध्वनीति किम् ? पन्थानं गच्छति ।

➢ गन्त्राधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात् पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव— उत्पथेन पथे गच्छति ।

**॥ इति चतुर्थी ॥**

---

## अथ पञ्चमी विभक्तिः

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**५५.ध्रुवमपायेऽपादानम् [ १.४.२४ ]**

अर्थः– अपायो= विश्लेषः, तस्मिन्साध्ये ध्रुवम्= अवधिभूतं कारकम् अपादानं स्यात् ।

❖ पञ्चमीविभक्तिविधायकं विधिसूत्रम्—

**५६.अपादाने पञ्चमी [ २.३.२८ ]**

उदा. → ग्रामादायाति । धावतोऽश्वात्पतति ।

➢ कारकं किम् ? वृक्षस्य पर्णं पतति ।

★ अपादानसञ्ज्ञाविधायकं वार्तिकम्—

**जुगुप्सा-विराम-प्रमादार्थानामुपसङ्ख्यानम् ।**

उदा. → पापाज्जुगुप्सते, विरमति । धर्मात्प्रमाद्यति ॥

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**५७.भी-त्रार्थानां भयहेतुः [ १.४.२५ ]**

अर्थः– भयार्थानां त्राणार्थानां च प्रयोगे हेतुरपादानं स्यात् ।

उदा. → चोराद् बिभेति । चोरात् त्रायते ।

➢ भयहेतुः किम् ? अरण्ये बिभेति त्रायते वा ।

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**५८.परा-जेरसोढः [ १.४.२६ ]**

अर्थः– परा-जेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् ।

उदा. → अध्ययनात् पराजयते । ग्लायतीत्यर्थः ।

➢ असोढः किम् ? शत्रून् पराजयते । अभिभवतीत्यर्थः ।

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**५९.वारणार्थानामीप्सितः [ १.४.२७ ]**

अर्थः– प्रवृत्तिविघातो= वारणम् , वारणार्थानां धातूनां प्रयोगे ईप्सितोऽपादानं स्यात् ।

उदा. → यवेभ्यो गां वारयति ।

➢ ईप्सितः किम् ? यवेभ्यो गां वारयति क्षेत्रे ।

[5] 'न त्वां नावमन्नं वा मन्ये' इत्यपि कुत्रचित् संस्करणेषु पाठः।

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**६०.अन्तर्धौ[6] येनादर्शनमिच्छति [ १.४.२८ ]**

अर्थः– व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति, तदपादानं स्यात्।

उदा. → मातुर्निलीयते कृष्णः।

- अन्तर्धौ किम्? चौरान् न दिदृक्षते।
- इच्छतिग्रहणं किम्? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् — (देवदत्ताद्यज्ञदत्तो निलीयते[7]।)

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**६१.आख्यातोपयोगे [ १.४.२९ ]**

अर्थः– नियमपूर्वक-विद्यास्वीकारे वक्ता प्राक्सञ्ज्ञः स्यात्।

उदा. → उपाध्यायाद् अधीते।

- उपयोगे किम्? नटस्य गाथां शृणोति॥

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**६२.जनिकर्तुः प्रकृतिः [ १.४.३० ]**

अर्थः– जायमानस्य हेतुरपादानं स्यात्।

उदा. → ब्रह्मणः प्रजाः प्रजायन्ते॥

❖ अपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**६३.भुवः प्रभवः [ १.४.३१ ]**

अर्थः– भवनं= भूः, भूकर्तुः प्रभवस्तथा।

उदा. → हिमवतो गङ्गा प्रभवति। तत्र प्रकाशते इत्यर्थः।

★ पञ्चमीविभक्तिविधायकं वार्तिकम्—

**ल्यब्लोपे कर्मण्यधिकरणे च।**

उदा. → प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। प्रासादमारुह्य, आसने उपविश्य, प्रेक्षत इत्यर्थः।

उदा. → श्वशुराज्जिहेति। श्वशुरं वीक्ष्येत्यर्थः।

- **गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्।**[8]

उदा. → कस्मात्त्वं नद्याः।

★ पञ्चमीविभक्तिविधायकं वार्तिकम्—

**यतश्चाध्वकालनिर्माणं[9] तत्र[10] पञ्चमी।**

★ प्रथमा-सप्तमी-विभक्तिविधायकं वार्तिकम्—

**तद्युक्तादध्वनः प्रथमासप्तम्यौ।**

★ सप्तमीविभक्तिविधायकं वार्तिकम्—

**कालात्सप्तमी च वक्तव्या[11]।**

उदा. → वनाद् ग्रामो योजनं योजने वा। कार्तिक्या आग्रहायणी मासे।

❖ पञ्चमीविधायकं विधिसूत्रम्—

**६४.अन्याऽऽराद् इतरर्ते-दिक्छब्दाऽञ्चूत्तरपदाऽऽज् आहियुक्ते [ २.३.२९ ]**

अर्थः– एतैर्योगे पञ्चमी स्यात्।

- 'अन्य' इत्यर्थग्रहणम्, इतरग्रहणं प्रपञ्चार्थम्।

उदा. → अन्यो भिन्न इतरो वा कृष्णात्।

उदा. → आराद्वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्।

- दिशि दृष्टः शब्दो दिक्शब्दः। तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति — चैत्रात् पूर्वः फाल्गुनः।
- अवयववाचियोगे तु न। 'तस्य परमाम्रेडितम्' इति निर्देशात् —पूर्वं कायस्य।
- अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ..' इति षष्ठीं बाधितुं पृथग्ग्रहणम्— प्राक् प्रत्यग्वा ग्रामात्।
- आच्— दक्षिणा ग्रामात्।
- आहि— दक्षिणाहि ग्रामात्।
- 'अपादाने पञ्चमी' इति सूत्रे 'कार्तिक्याः प्रभृती'ति भाष्यप्रयोगात् प्रभृत्यर्थयोगे पञ्चमी — भवात् प्रभृति आरभ्य वा सेव्यो हरिः।
- 'अपपरिबहिः..' इति समासविधानाज्ज्ञापकाद्बहिर्योगे पञ्चमी — ग्रामाद्बहिः।

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**६५.अपपरी वर्जने [ १.४.८८ ]**

अर्थः– एतौ वर्जने कर्मप्रवचनीयौ स्तः॥

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**६६.आङ् मर्यादावचने [ १.४.८९ ]**

अर्थः– आङ् मर्यादायामुक्तसञ्ज्ञः स्यात्।

- वचनग्रहणादभिविधावपि॥

❖ कर्मप्रवचनीययोगेपञ्चमीविधायकं विधिसूत्रम्—

**६७.पञ्चम्यपाङ्परिभिः [ २.३.१० ]**

अर्थः– एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्।

उदा. → अप हरेः, परि हरेः संसारः। परिरत्र वर्जने।

उदा. → लक्षणादौ तु हरिं परि।

उदा. → आ मुक्तेः संसारः। आ सकलाद् ब्रह्म॥

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**६८. प्रतिः प्रतिनिधिप्रतिदानयोः [ १.४.९२ ]**

अर्थः– एतयोरर्थयोः प्रतिरुक्तसञ्ज्ञः स्यात्॥

❖ कर्मप्रवचनीययोगे पञ्चमीविधायकं विधिसूत्रम्—

**६९.प्रतिनिधिप्रतिदाने च यस्मात् [ २.३.११ ]**

अर्थः– अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्।

उदा. → प्रद्युम्नः कृष्णात् प्रति। तिलेभ्यः प्रतियच्छति माषान्॥

❖ पञ्चमीविभक्तिविधायकं विधिसूत्रम्—

**७०.अकर्तर्यृणे पञ्चमी [ २.३.२४ ]**

अर्थः– कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात्।

उदा. → शताद् बद्धः।

- अकर्तरि किम्? शतेन बन्धितः।

❖ पञ्चमी-तृतीयाविभक्तिविधायकं विधिसूत्रम्—

**७१.विभाषा गुणेऽस्त्रियाम् [ २.३.२५ ]**

अर्थः– गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्।

उदा. → जाड्याद् जाड्येन वा बद्धः।

- गुणे किम्? धनेन कुलम्।

[6] धरानन्दशास्त्रिप्रणीतायां कारकस्य टीकायाम् 'अन्तर्द्धौ' इति पाठोपलभते।
[7] अयं पाठः बहुत्र मूले नास्ति।
[8] कुत्रचित् संस्करणेष्विदं वार्तिकरूपेण पठितम्।
[9] बालमनोरमाटीकाकर्तुः मते 'निर्माणम्' इति स्थाने 'निमानम्' इति पाठः।
[10] 'ततः' इति क्वचित्पाठः।
[11] यतश्च.., तद्युक्ता..., कालात्— इति वार्तिकत्रयं धरानन्दशास्त्रिणा एकवार्तिकरूपेण पठितम्।

- अस्त्रियां किम् ? बुद्ध्या मुक्तः ।
- विभाषेति योगविभागादगुणे स्त्रियां च क्वचित्— धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ।

❖ तृतीया-पञ्चमी-द्वितीयाविधायकं विधिसूत्रम्—

**७२.पृथग्-विना-नानाभिस्तृतीयाऽन्यतरस्याम् [ २.३.३२ ]**

अर्थः– एभिर्योगे तृतीया स्यात्, पञ्चमी-द्वितीये च ।

- अन्यतरस्यां ग्रहणं समुच्चयार्थम् । पञ्चमी-द्वितीयेऽनुवर्तेते ।

उदा. → पृथग् रामेण रामात् रामं वा , एवं विना नाना ॥

❖ तृतीया-पञ्चमीविधायकं विधिसूत्रम्—

**७३.करणे च स्तोकाल्प-कृच्छ्र-कतिपयस्यासत्त्ववचनस्य [२.३.३३ ]**

अर्थः– एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः ।

उदा. → स्तोकेन स्तोकाद्वा मुक्तः ।

- द्रव्ये तु स्तोकेन विषेण हतः ॥

❖ तृतीया-पञ्चमी-द्वितीयाविधायकं विधिसूत्रम्—

**७४.दूरान्तिकार्थेभ्यो द्वितीया च [ २.३.३५ ]**

अर्थः– एभ्यो द्वितीया स्यात् । चात् पञ्चमी-तृतीये च ।

- प्रातिपदिकार्थमात्रे विधिरयम् ।

उदा. → ग्रामस्य दूरं दूराद् दूरेण वा ।

अन्तिकम् अन्तिकाद् अन्तिकेन वा।

- 'असत्त्ववचनस्ये'त्यनुवृत्तेर्नेह — दूरः पन्थाः ।

**॥ इति पञ्चमी ॥**

---

## अथ षष्ठी विभक्तिः

❖ षष्ठीविभक्तिविधायकं विधिसूत्रम्—

**७५.षष्ठी शेषे [ २.३.५० ]**

अर्थः– कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः, तत्र षष्ठी स्यात् ।

उदा. → राज्ञः पुरुषः ।

- कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव ।

उदा. → सतां गतम् । सर्पिषो जानीते । मातुः स्मरति ।

एधोदकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ॥

❖ षष्ठीविभक्तिविधायकं विधिसूत्रम्—

**७६.षष्ठी हेतुप्रयोगे [ २.३.२६ ]**

अर्थः– हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् ।

उदा. → अन्नस्य हेतोर्वसति ॥

❖ तृतीया-षष्ठीविभक्तिविधायकं विधिसूत्रम्—

**७७.सर्वनाम्नस्तृतीया च [ २.३.२७ ]**

अर्थः–सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च।

उदा. → केन हेतुना वसति । कस्य हेतोः ।

★ सर्वविभक्तिविधायकं वार्तिकम्—

**निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् ।**

उदा. → किं निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि ।

एवं— किं कारणं को हेतुः किं प्रयोजनम् इत्यादि ।

- 'प्राय'ग्रहणाद् असर्वनाम्नः प्रथमा-द्वितीये न स्तः— ज्ञानेन निमित्तेन हरिः सेव्यः, ज्ञानाय निमित्तायेत्यादि ।

❖ षष्ठीविभक्तिविधायकं विधिसूत्रम्—

**७८.षष्ठ्यतसर्थप्रत्ययेन [ २.३.३० ]**

अर्थः– एतद्योगे षष्ठी स्यात् ।

- 'दिक्शब्द..' इति पञ्चम्या अपवादः ।

उदा. → ग्रामस्य दक्षिणतः । पुरः, पुरस्तात् , उपरि, उपरिष्टात् ॥

❖ द्वितीयाविभक्तिविधायकं विधिसूत्रम्—

**७९.एनपा द्वितीया [ २.३.३१ ]**

अर्थः– एनबन्तेन योगे द्वितीया स्यात् ।

- 'एनपा' इति योगविभागात् षष्ठ्यपि ।

उदा. → दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ।

❖ पञ्चमी-षष्ठीविभक्तिविधायकं विधिसूत्रम्—

**८०.दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् [ २.३.३४ ]**

अर्थः– एतैर्योगे षष्ठी स्यात् पञ्चमी च ।

उदा. → दूरं निकटं ग्रामस्य ग्रामाद्वा ।

## अथ कारकशेषा (प्रतिपदविधाना) षष्ठी ।

❖ करणे शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८१.ज्ञोऽविदर्थस्य करणे [ २.३.५१ ]**

अर्थः– जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् ।

उदा. → सर्पिषो ज्ञानम् ॥

❖ कर्मणि शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८२.अधीगर्थदयेशां कर्मणि [ २.३.५२ ]**

अर्थः– एषां कर्मणि शेषे षष्ठी स्यात् ।

उदा. → मातुः स्मरणम् । सर्पिषो दयनम्, ईशनं वा ॥

❖ कर्मणि शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८३.कृञः प्रतियत्ने [ २.३.५३ ]**

अर्थः– प्रतियत्नो= गुणाधानम्, कृञः कर्मणि शेषे षष्ठी स्याद् गुणाधाने ।

उदा. → एधोदकस्योपस्करणम् ॥

❖ कर्मणि शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८४.रुजार्थानां भाववचनानामज्वरेः [ २.३.५४ ]**

अर्थः– भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् ।

उदा. → चौरस्य रोगस्य रुजा ।

★ षष्ठीविधायकं वार्तिकम्— **अज्वरि-संताप्योरिति वाच्यम् ।**

उदा. → रोगस्य चौरज्वरः चौरसन्तापो वा । रोगकर्तृकं चौरसम्बन्धि ज्वरादिकमित्यर्थः ॥

❖ कर्मणि शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८५.आशिषि नाथः [ २.३.५५ ]**

अर्थः– आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् ।

उदा. → सर्पिषो नाथनम् ।

- आशिषीति किम् ? माणवकनाथनम् । तत्सम्बन्धिनी याच्ञेत्यर्थः ॥

❖ कर्मणि शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८६.जासि-निप्रहण-नाट-क्राथ-पिषां हिंसायाम् [ २.३.५६ ]**

अर्थः– हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात् ।

- उदा. → चौरस्योज्जासनम् ।
- नि-प्रौ संहतौ विपर्यस्तौ व्यस्तौ वा ।

उदा. → चौरस्य निप्रहणनम् । प्रणिहननम् । निहननम् । प्रहणनं वा ।

- 'नट अवस्कन्दने' चुरादिः । उदा. → चौरस्योन्नाटनम् ।

उदा. → चौरस्य क्राथनम् । वृषलस्य पेषणम् ।

- हिंसायां किम् ? धानापेषणम् ॥

❖ कर्मणि शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८७.व्यव-हृ-पणोः समर्थयोः [ २.३.५७ ]**

अर्थः– शेषे कर्मणि षष्ठी स्यात् ।

- द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता ।

उदा. → शतस्य व्यवहरणं पणनं वा ।

- समर्थयोः किम् ? शलाकाव्यवहारः , गणनेत्यर्थः । ब्राह्मणपणनं स्तुतिरित्यर्थः ॥

❖ कर्मणि शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**८८.दिवस्तदर्थस्य [ २.३.५८ ]**

अर्थः– द्यूतार्थस्य क्रय-विक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् ।

उदा. → शतस्य दीव्यति ।

- तदर्थस्य किम् ? ब्राह्मणं दीव्यति , स्तौतीत्यर्थः ।

❖ कर्मणि विकल्पेन षष्ठीविधायकं विधिसूत्रम्—

**८९.विभाषोपसर्गे [ २.३.५९ ]**

- पूर्वयोगापवादः।

उदा. → शतस्य शतं वा प्रतिदीव्यति ॥

❖ कर्मणि षष्ठीविधायकं विधिसूत्रम्—

**९०.प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने [ २.३.६१ ]**

अर्थः– देवतासम्प्रदानके[12]ऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य[13] वाचकाच्छब्दात् षष्ठी स्यात् ।

उदा. → अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा ।

❖ शेषत्वेन षष्ठीविधायकं विधिसूत्रम्—

**९१.कृत्वोऽर्थप्रयोगे कालेऽधिकरणे [ २.३.६४ ]**

अर्थः– कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात्।

उदा. → पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् ।

- शेषे किम् ? द्विरहन्यध्ययनम् ॥

❖ कर्तरि कर्मणि च षष्ठीविधायकं विधिसूत्रम्—

**९२.कर्तृकर्मणोः कृति [ २.३.६५ ]**

अर्थः– कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् ।

उदा. → कृष्णस्य कृतिः । जगतः कर्ता कृष्णः ।

★ विकल्पेन षष्ठीविधायकं वार्तिकम्— **गुणकर्मणि वेष्यते ।**

उदा. → नेता अश्वस्य स्रुघ्नस्य[14] स्रुघ्नं वा ।

- कृति किम् ? तद्धिते माभूत्— कृतपूर्वी कटम् ॥

❖ कर्मणि षष्ठीनियामकं नियमसूत्रम्—

**९३.उभयप्राप्तौ कर्मणि [ २.३.६६ ]**

अर्थः– उभयोः प्राप्तिर्यस्मिन् कृति, तत्र कर्मण्येव षष्ठी स्यात् ।

उदा. → आश्चर्यो गवां दोहोऽगोपेन ।

★ षष्ठीविभक्तिविधायकं वार्तिकम्—

**स्त्री-प्रत्यययोरकाकारयोर्नायं नियमः।**

उदा. → भेदिका बिभित्सा वा रुद्रस्य जगतः ।

★ विकल्पेन षष्ठीविभक्तिविधायकं वार्तिकम्— **शेषे विभाषा ।**

- स्त्रीप्रत्यय इत्येके। उदा. → विचित्रा जगतः कृतिर्हरेः हरिणा वा ।
- केचिदविशेषेण विभाषामिच्छन्ति । उदा. → शब्दानाम् अनुशासनम् आचार्येण आचार्यस्य वा ॥

❖ कर्तरि-कर्मणि-षष्ठीविधायकं विधिसूत्रम्—

**९४. क्तस्य च वर्तमाने [ २.३.६७ ]**

अर्थः– वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् ।

- 'न लोक...' इति निषेधस्यापवादः ।

उदा. → राज्ञां मतो बुद्धः पूजितो वा ॥

❖ षष्ठीविभक्तिविधायकं विधिसूत्रम्—

**९५.अधिकरणवाचिनश्च [ २.३.६८ ]**

अर्थः– क्तस्य योगे षष्ठी स्यात् ।

उदा. → इदमेषामासितं शयितं गतं भुक्तं वा ।

❖ कर्तरि कर्मणि निषेधकं सूत्रम्—

**९६.न लोकाव्यय-निष्ठा-खलर्थ-तृनाम् [ २.३.६९ ]**

अर्थः– एषां प्रयोगे षष्ठी न स्यात् ।

उदाहरणानि →

- लादेशाः[15]— कुर्वन् कुर्वाणो वा सृष्टिं हरिः ।
- उः — हरिं दिदृक्षुः । अलङ्करिष्णुर्वा ।
- उकः — दैत्यान् घातुको हरिः ।

★ षष्ठीविधायकं वार्तिकम्— **कमेरनिषेधः।**

- लक्ष्म्याः कामुको हरिः ।
- अव्ययम्— जगत् सृष्ट्वा । सुखं कर्तुम् ।
- निष्ठा— विष्णुना हता दैत्याः । दैत्यान् हतवान् विष्णुः।
- खलर्थाः— ईषत्करः प्रपञ्चो हरिणा ।
- तृन्निति प्रत्याहारः 'लटः शतृशानचा'विति 'तृ'शब्दादारभ्य आ तृनो नकारात् —
  - शानन् — सोमं पवमानः।
  - चानश् — आत्मानं मण्डयमानः ।
  - शतृ — वेदमधीयन् ।
  - तृन् — कर्ता लोकान् ।

★ विकल्पेन षष्ठीविधायकं वार्तिकम्— **द्विषः शतुर्वा ।**

उदा. → मुरस्य मुरं वा द्विषन् ।

---

[12] बहुत्र संस्करणेषु 'सम्प्रदाने' इत्यपि पाठः।

[13] 'हविषो वाचकात्' इत्यपि कुत्रचित् संस्करणेषु पाठः।

[14] 'स्रुघ्नस्य स्रुघ्नम्' केवलो घकारयुक्तः पाठोऽपि समीचीनः।

[15] कुत्रचित् संस्करणेषु 'लादेश' इति निर्विभक्तिकः पाठः बालमनोरमासम्मतः। एवमेतत् सूत्रीयान्यप्रतीकेष्वपि बोध्यम्।

➢ सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः, शेषे षष्ठी तु स्यादेव — ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ।

❖ षष्ठीनिषेधकं सूत्रम्—

**९७.अकेनोर्भविष्यदाधमर्ण्ययोः [ २.३.७० ]**

अर्थः– भविष्यति 'अकस्य' भविष्यदाधमर्ण्यार्थ-'इनः' च योगे षष्ठी न स्यात् ।

उदा. → सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ॥

❖ विकल्पेन तृतीया-षष्ठीविधायकं विधिसूत्रम्—

**९८.कृत्यानां कर्तरि वा [ २.३.७१ ]**

अर्थः– षष्ठी वा स्यात् ।

उदा. → मया मम वा सेव्यो हरिः ।

➢ कर्तरीति किम् ? गेयो माणवकः साम्नाम् । 'भव्यगेय' इति कर्तरि यद्विधानादनभिहितं कर्म ।

➢ अत्र योगो विभज्यते— 'कृत्यानाम्'। 'उभयप्राप्तावि'ति 'ने'ति चानुवर्तते । तेन— नेतव्या व्रजं गावः कृष्णेन ।

ततः— 'कर्तरि वा' ॥ उक्तोऽर्थः ॥

## ♣ अथ-उपपदषष्ठी विभक्तिः ♣

❖ विकल्पेन तृतीया-षष्ठीविधायकं विधिसूत्रम्—

**९९. तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् [ २.३.७२ ]**

अर्थः– तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी ।

उदा. → तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा ।

➢ अतुलोपमाभ्यां किम् ? तुला उपमा वा कृष्णस्य नास्ति ।

❖ विकल्पेन चतुर्थी-षष्ठीविधायकं विधिसूत्रम्—

**१००.चतुर्थी चाशिष्यायुष्य-मद्र-भद्र-कुशल-सुखार्थ-हितैः [२.३.७३ ]**

➢ अर्थः– एतदर्थैर्योगे चतुर्थी वा स्यात्, पक्षे षष्ठी आशिषि ।

उदा. → आयुष्यं चिरञ्जीवितं कृष्णाय कृष्णस्य वा भूयात् । एवं मद्रं= भद्रम्, कुशलं= निरामयम्, सुखं= शम्, अर्थः= प्रयोजनम्, हितं= पथ्यं वा भूयात् ।

➢ आशिषि किम् ? देवदत्तस्यायुष्यमस्ति ।

➢ व्याख्यानात् सर्वत्रार्थग्रहणम् । मद्र-भद्रयोः पर्यायत्वाद् अन्यतरो न पठनीयः ।

**॥ इति षष्ठी ॥**

---

## अथ सप्तमी विभक्तिः

❖ अधिकरणसञ्ज्ञाविधायकं-सञ्ज्ञासूत्रम्—

**१०१.आधारोऽधिकरणम् [ १.४.४५ ]**

अर्थः– कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसञ्ज्ञः स्यात् ।

❖ सप्तमीविधायकं विधिसूत्रम्—

**१०२.सप्तम्यधिकरणे च [ २.३.३६ ]**

अर्थः– अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः ।

➢ औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा ।

उदाहरणानि →

- कटे आस्ते । स्थाल्यां पचति ।
- मोक्षे इच्छास्ति ।
- सर्वस्मिन्नात्मास्ति ।
- वनस्य दूरे अन्तिके वा ।

➢ 'दूरान्तिकार्थेभ्यः' इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः ॥

★ सप्तमीविभक्तिविधायकं वार्तिकम्— **क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम् ।**

➢ उदा. → अधीती व्याकरणे ।

➢ अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्च' इति कर्तरीनिः।

★ सप्तमीविभक्तिविधायकं वार्तिकम्— **साध्वसाधुप्रयोगे च ।**

➢ उदा. → साधुः कृष्णो मातरि । असाधुर्मातुले ।

★ सप्तमीविभक्तिविधायकं वार्तिकम्— **निमित्तात्कर्मयोगे ।**

➢ निमित्तमिह फलम् । योगः संयोगसमवायात्मकः ।

उदाहरणानि →

➢ चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ १ ॥ (इति भाष्यम् ।)

➢ हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थमिदम् ।

➢ सीमाऽण्डकोशः । पुष्कलको गन्धमृगः ।

➢ योगविशेषे किम् ? वेतनेन धान्यं लुनाति ॥

❖ सप्तमीविभक्तिविधायकं विधिसूत्रम्—

**१०३.यस्य च भावेन भावलक्षणम् [ २.३.३७ ]**

अर्थः– यस्य क्रियया क्रियान्तरं लक्ष्यते, ततः सप्तमी स्यात् ।

उदा. → गोषु दुह्यमानासु गतः ।

★ सप्तमीविभक्तिविधायकं वार्तिकम्—

**अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च।**

उदाहरणानि →

- सत्सु तरत्सु असन्त आसते ।
- असत्सु तिष्ठत्सु सन्तस्तरन्ति ।
- सत्सु तिष्ठत्सु असन्तस्तरन्ति ।
- असत्सु तरत्सु सन्तस्तिष्ठन्ति ॥

❖ पर्यायेण षष्ठी-सप्तमीविधायकं विधिसूत्रम्—

**१०४.षष्ठी चानादरे [ २.३.३८ ]**

अर्थः– अनादराधिक्ये[16] भावलक्षणे षष्ठी-सप्तम्यौ स्तः ।

उदा. → रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य सन्न्यस्तवान् इत्यर्थः।

---

[16] बालमनोरमायां तु 'अनादराधिके' इति पाठः।

❖ षष्ठी-सप्तमीविधायकं विधिसूत्रम्—

**१०५.स्वामीश्वराधिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च [२.३.३९]**

अर्थः– एतैः सप्तभिर्योगे षष्ठी-सप्तम्यौ स्तः।

➢ षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम्।

उदा. → गवां गोषु वा स्वामी।

उदा. → गवां गोषु वा प्रसूतः। गा एवानुभवितुं जात इत्यर्थः।

❖ पर्यायेण षष्ठी-सप्तमीविधायकं विधिसूत्रम्—

**१०६.आयुक्त-कुशलाभ्यां चासेवायाम् [ २.३.४० ]**

अर्थः– आभ्यां योगे षष्ठी-सप्तम्यौ स्तः, तात्पर्येऽर्थे।

➢ आयुक्तो= व्यापारितः।

उदा. → आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा।

➢ आसेवायां किम्? आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः।

❖ पर्यायेण षष्ठी-सप्तमी-विधायकं विधिसूत्रम्—

**१०७.यतश्च निर्धारणम् [ २.३.४१ ]**

अर्थः– जाति-गुण-क्रिया-सञ्ज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठी-सप्तम्यौ स्तः।

उदाहरणानि →

- नृणां नृषु वा ब्राह्मणः श्रेष्ठः।
- गवां गोषु वा कृष्णा बहुक्षीरा।
- गच्छतां गच्छत्सु वा धावन् शीघ्रः।
- छात्राणां छात्रेषु वा मैत्रः पटुः।

❖ पञ्चमीविभक्तिविधायकं विधिसूत्रम्—

**१०८.पञ्चमी विभक्ते [ २.३.४२ ]**

अर्थः– विभागो विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्।

उदा. → माथुराः पाटलिपुत्रकेभ्य आढ्यतराः।

❖ सप्तमीविभक्तिविधायकं विधिसूत्रम्—

**१०९. साधु-निपुणाभ्यामर्चायां सप्तम्यप्रतेः [ २.३.४३ ]**

अर्थः– आभ्यां योगे सप्तमी स्याद् अर्चायां न तु प्रतेः प्रयोगे।

उदा. → मातरि साधुर्निपुणो वा।

➢ अर्चायां किम्? निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्।

★ सप्तमीविभक्तिविधायकं वार्तिकम् — **अप्रत्यादिभिरिति वक्तव्यम्।**

उदा. → साधुर्निपुणो वा मातरं प्रति पर्यनु वा।

❖ पर्यायेण तृतीया-सप्तमी-विधायकं विधिसूत्रम्—

**११०. प्रसितोत्सुकाभ्यां तृतीया च [ २.३.४४ ]**

अर्थः– आभ्यां योगे तृतीया स्यात्, चात् सप्तमी।

उदा. → प्रसित/उत्सुको हरिणा/ हरौ वा॥

❖ पर्यायेण तृतीया-सप्तमी-विधायकं विधिसूत्रम्—

**१११.नक्षत्रे च लुपि [ २.३.४५ ]**

अर्थः– नक्षत्रे प्रकृत्यर्थे यो लुप्सञ्ज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे।

उदा. → मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्। मूले श्रवणे इति वा।

➢ लुपि किम्? पुष्ये शनिः॥

❖ पर्यायेण पञ्चमी-सप्तमी-विधायकं विधिसूत्रम्—

**११२.सप्तमी-पञ्चम्यौ कारकमध्ये [ २.३.७ ]**

अर्थः– शक्तिद्वयमध्ये यौ कालाध्वनौ ताभ्यामेते स्तः।

उदा. → अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद् वा भोक्ता।

➢ कर्तृशक्त्योर्मध्येऽयं कालः।

➢ इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्तृकर्मशक्त्योर्मध्येऽयं देशः।

➢ अधिकशब्देन योगे सप्तमी-पञ्चम्याविष्येते। 'तदस्मिन्नधिकम्...' 'यस्मादधिकम्...' इति च सूत्रनिर्देशात् — लोके लोकाद्वा अधिको हरिः॥

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**११३.अधिरीश्वरे [ १.४.९७ ]**

अर्थः– स्वस्वामिभावसम्बन्धे 'अधिः' कर्मप्रवचनीयसञ्ज्ञः स्यात्।

❖ कर्मप्रवचनीययोगे सप्तमीविधायकं विधिसूत्रम्—

**११४.यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी [ २.३.९ ]**

अर्थः– अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्।

उदा. → उप परार्धे हरेर्गुणाः। परार्धादधिका इत्यर्थः।

➢ ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी।

उदा. → अधि भुवि रामः। अधि रामे भूः।

➢ 'सप्तमी शौण्डैः' इति समासपक्षे तु रामाधीना। 'अषडक्ष...' इत्यादिना खः॥

❖ कर्मप्रवचनीयसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**११५.विभाषा कृञि [ १.४.९८ ]**

अर्थः– अधिः करोतौ प्राक्सञ्ज्ञो वा स्यादीश्वरेऽर्थे।

उदा. → यदत्र मामधिकरिष्यति। विनियोक्ष्यत इत्यर्थः।

➢ इह विनियोक्तुरीश्वरत्वं गम्यते। अगतित्वात् 'तिङि चोदात्तवति' इति निघातो न।

**॥ इति सप्तमी ॥**

---

**॥ इति वैयाकरणसिद्धान्तकौमुद्यां कारकप्रकरणम् ॥**